अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सा नाशे परामर्शकाले च सिद्धिसत्त्वे अनुमित्सान्तरोत्पत्त्यैव अनुमितिः, तथैव कारणीभूतस्य विशिष्टाभावस्य संपत्तिः इत्युपाध्यायाः।

अन्ये तु द्वित्रिक्षणान्तरितायां अपि अनुमित्सायां अनुमितिदर्शनात् अनुमित्सा योग्यता वाच्या, सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः, अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिवसादिविलम्बेन इन्द्रियादिना निर्णीतेऽपि साध्ये लिंगपरामर्शात् अनुमितिप्रसंगात्।

किन्तु अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेन उत्सर्गतः परामर्शो जायते तावानेव कालः, फलबलेन तथा कल्पनात्। अथवा अनुमित्सोत्पत्त्यनन्तरं अनुमित्सा नाशेऽपि सिद्धौ सत्यां यावत्कालमध्ये अनुमितिजयिते तावानेव कालो अनुमित्सया उपलक्षितः। यदि च सिद्ध्यनन्तरे तन्नाशेऽपि द्वित्रिक्षणमध्ये विना अनुमित्सां अनुमित्यनुत्पादो अनुभवसिद्धः, तदा सिध्यापि तावानेव समयः उपलक्षणीयः। विशिष्य क्षणनियमस्तु अवहितैः करणीय इति वदन्ति।

अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योः इष्टसाधनतयाज्ञ एकं स्मरणं ततः तयोः अनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमिति, तत्र तदनन्तरं अनुमितिप्रसङ्गः, योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणम्। पक्षसाध्यभेदेन पक्षतायाः भेदात् पृथक्पृथगेव कार्यकारणभावः, तथा च यत्र सिद्ध्यनन्तरं कदापि अनुमितिः न जाता तत्र

सिद्ध्यभावमात्रं कारणम्, न तु तत्रेच्छानिवेशोऽपि गौरवात् प्रयोजनाभावाच्च, तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापि इच्छा न जाता तत्र उक्तिसाधारण्यमात्रसम्पादनाय ईश्वरेच्छानिवेशनाय सो नोपादेयः।

यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितो-त्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषावि-रहविशिष्टायाः तस्याः अभावः पक्षता।

अथ तृतीयक्षणघटकद्वितीयक्षणे एव अव्यवहित-त्वपर्यवसानात् यत्र अविरलक्रमेण सिद्धिसिषाधयिषानुमितयः तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयसिषाधयिषाविरहः विशे-षणमस्तु सिद्धेः, प्राथमिकस्तु स्वक्षणस्य किमर्थं इति चेत् यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयः तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थं ~~[illegible]~~ इति।

तन्न। यत्र अनुमित्सानाशकाले प्रात्यक्षिकी सिद्धिः अथ च परामर्शानुमिती तत्र पक्षताविरहप्रसङ्गात्।

अथ प्रथमक्षणमपेक्ष्य द्वितीयस्यैव, द्वितीयक्षणमपेक्ष्य तृतीयस्याव्यवहितोत्तरत्वं, स्वध्वंसानधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसानधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यं, तथा च यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं, द्वितीयन्तु सिद्धेः तत्रैव द्वितीयक्षणे पक्षतासम्प-त्तये, यदि पुनरिच्छाजनिका सामग्री प्रतिबन्धनात्यनुमितिं तदा अनुमित्यव्यवहितपूर्ववर्ति सिद्धिभिन्नसिद्ध्यभावमात्रं पक्षता इति चेत्। तादृशसिद्धीनां तत्तद्व्यक्तित्वेन वा अभावः कारणं निरुक्तरूपविशिष्टत्वेन वा। नाद्यः, अनन्तकार्यका-

रणभावप्रसङ्गात् नाद्य: सकलसिद्धौ अनुमित्साविरहविशेषण-
-दानस्य वैयर्थ्यात् तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयाव-
च्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्व प्रसङ्गाच्च।
नान्त्यः, सत्यपि परामर्शादौ कस्याश्चित् सिद्धेः अनन्तरं
अनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात्। न वा
कारणतावच्छेदकावच्छिन्न समाजाधनि कार्योत्पादादिकं
कारणतावच्छेदककोटौ निविशेत, तथासति उत्पत्ति-
-कालावच्छिन्नत्व विशेषितेन स्वक्षणाव्यवहितोत्तरक्ष-
-णोत्पत्तिक स्वसमानाधिकरणानुमितिक सविषयत्वेन,
स्वसमानाधिकरणानुमित्यव्यवहित पूर्वक्षणोत्पन्न सविषय-
कत्वेन, स्वक्षणाव्यवहितोत्तर क्षणानुत्पत्तिक स्वसमा-
नाधिकरणानुमितिकभिन्नसविषयत्वेन वा किं वा
स्वसमानाधिकरणानुमित्यव्यवहित पूर्वक्षणवर्तित्व विशि-
-ष्टज्ञानत्वादिना कारणत्वं स्यात्, अव्यवहितो-
त्तरश्च द्वितीय एव क्षण इति नातिप्रसङ्गः।
न च आदिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसि-
-द्ध्यादिविनाशः तत्र उत्तरक्षणे अनुमितिर्न स्यात्
परामर्शस्यातथात्वादिति वाच्यम् अनुमिति सामग्र्या
विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेः
अन्ततः संस्काराद्वा तत्संभवात् संस्कारजन्यत्वेन
स्मृतित्वस्य प्रागेव निरासात्, स्याद्वा स्वसमानाधि-
-करणानुमित्यव्यवहितपूर्वत्वानधिकरण क्षणवृत्तित्ववि-
शिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधि-
-करणसमयाव्यवहित पूर्वक्षणवृत्तित्व विशिष्टत्वेन वा
प्रतिबन्धकत्वम्। तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्ति

कध्वंसप्रतियोगित्वम् । न चात्र प्रथमे यत्र सिद्ध्यात्मक-
-परामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य
कस्यापि धर्मस्य न विनाशः अनन्तरं पुनरनुमितिः तत्र
तदुत्पत्तिसमयेऽपि सा स्यात् , तत्पूर्वकालीनानां सर्वेषां
तादृशपूर्ववृत्तित्वेन अविरोधित्वादिति वाच्यम् ।
अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसं-
-योगसन्तानान्तःपातिव्यक्तीनां अविरतमेवोपरमात् कालानु-
-त्पादकेनापि तादृशकल्पनासम्भवात् कारणान्तरकल्पने-
गौरवाच्च । अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहावि-
-रोधित्वात् । उपाधीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा
एव तादृशपूर्ववर्त्तिभिन्नाः , भवेद्वा तत्तत्पुरुषीयानुमितिं
प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्ति-
-त्वविशिष्टत्वादिना वा कारणत्वं तथा च उपमानादेः
प्रमाणान्तरत्वं भज्येत सर्वत्र अनुमितिसामग्रीसम्भवात् ,
विलीयेत च परामर्शत्वादिना कारणत्वं बाधकत्वादिना
च प्रतिबन्धकत्वम् । अनयैव रीत्या कार्यान्तरेष्वपि
कॢप्तानां कारणानां प्रतिबन्धकानाञ्च तथात्वमकॢप्तानां
च तथात्वं प्रसज्येत । अत एव न द्वितीयोऽपि
प्रकारः , ~~वैयर्थ्याच्च~~ वैयर्थ्याच्च सिद्धेः । सिषाधयिषा-
-विरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोः
अन्यतरस्य अभावः कारणमिति तु केचित् । तन्न ,
साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा ।
नाद्यः , चक्षुरादिसत्वे विनानुमितीच्छां अनुमित्यभाव-
-प्रसङ्गात् । न द्वितीयः , सिद्धेः पूर्वं तदुपहितत्वाभावेन
प्रत्यक्षसामग्री सत्वेऽपि अनुमित्यापत्तेः अनुमानातिरिक्त-
-त्यस्य

वैयर्थ्याच्च । न तृतीयः, अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन च अनुमितिकारणत्वं इति अन्योन्याश्रयात् । स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेः इत्यपि कश्चित् । वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमेन प्रथममुपस्थितत्वात् लाघवाच्च प्रत्येकमेव तथात्वं अन्यथा बाधादेः अपि तत्रैव अन्तर्भावप्रसङ्गात् । न च अनुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवम् । शाब्दसिद्धौ सत्यां अशाब्दज्ञानं जायतामितीच्छायां अनुमित्युत्पादात्, साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतायाः त्वयापि वाच्यत्वात् । स्वनिवर्तकप्रत्यक्षादिसामग्रीसमवहित अन्यत्वादिना च तादृशेच्छयोः अनुगमे अतीव गौरवम् । अन्यतरत्वघटकयोः अन्योन्याभावयोः मिथः विशेषणविशेष्यभावे विनिगमनाभावश्च ।

आत्मनिष्ठस्य समवायेन सिद्ध्यभावः । भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायाः तत्सामग्र्याः मणिविशिष्टस्य वह्नेः इव इतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् । तथा च कथं अनुगतरूपेण तयोः अभावः कारणम् । एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यमेककालावच्छेदेन एकात्मवृत्तित्वं प्रत्यक्षादिकारणं चक्षुःसंयोगादेस्तु अन्यादृशामिति सामग्रीविशेषाभावस्य हेतुत्वेऽपि

लाघवात् सिद्ध्यभाव एव पक्षव्यवहारानिमित्तम् । एतदेव अभिसन्धाय प्रवृत्तिनिमित्तमुक्तं इति वक्ष्यति । फलानुपहितसिद्धाव्याप्तिविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावस्य लघुत्वेऽपि सिद्धसाधनस्थले पक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्य आवश्यकत्वे बाधाभावो न विनिश्यते गौरवात् विशिष्टसिद्ध्यभावस्य च आत्मनिष्ठस्यैव अनुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहारइति ध्येयम् । एकस्य पुंसः अनुमित्सा सत्वेऽपि अन्यस्य तद्विषयलिङ्गः प्रत्यक्षादिसामग्रीसत्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसिद्धिसामग्रीविशेषविरहः अनन्यथासिद्धत्वेन हेतुः उपेतव्य इति वदन्ति ।

अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु । न चैवं मण्यादिस्थले यदाहः प्रत्युत्तेजकस्य हेतुत्वापत्तिः, उत्तेजकानां अनुगतत्वात् । तावदभावविशिष्टमण्यभावस्य च अनुगतत्वात् इति चेत् । इहापि दर्शितोऽननुगमः । सिषाधयिषायाः सिद्ध्युत्तरानुमितित्वव्याप्यानुगताननिमित्तत्वकं दुर्वचम्, सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वा अनुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकाले अनुमित्युत्पादो दुर्वारः । एकस्य च पुंसः सिद्धिसत्वेऽन्यस्य सिषाधयिषाशून्यस्य अनुमित्यनुत्पादप्रसङ्गः । अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतः अनुमितिसामान्योत्पत्तिप्रसङ्गात् । न हि ईदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति, न च अन्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति ।

तत्कल्पने च अतिगौरवम्। इह जायमाना सा सिद्ध्युत्तरैव स्यात् सा च न न जायेत तत्कारणाभावात् इति चेत्। समाजनिष्ठानुमितिसामान्यस्तु स्यादेव, कार्योत्पादनिरहस्य विना कारणाभावसम्भवात् कारणव्यापारत्वेन आवश्यककारणाभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रतिबन्धकाभावदन्वयव्यतिरेकशालित्वेन हेतुत्वात्, अन्यथा यथासम्भवं निमित्तकारणस्य समवायिकारणत्वावच्छेदकत्वप्रसङ्गात्।

अथानुमितिसाधारणसिद्धेः। प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत्प्रतिबन्धकाभावत्वेन कार्यकालवृत्तेरेव हेतुत्वात्, अनुमितिकाले च तदसम्भवात्, सा नोत्पद्यते इति चेन्न।

यस्य मण्याद्यभावादेः कार्यसमकालतया अन्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्वस्य, गौरवात्। अन्यथा समवायिकारणस्य कार्यसहभूतस्यैव हेतुत्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा रान विजयेरन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरलतया स्यानुभविकत्वात् कालभेदकल्पनायाञ्च मानाभावात्, मानाभावाच्च पक्षता न अनुमितिहेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः।

॥ इति पक्षतादीधितिः॥

# अवयवग्रन्थः

## चिन्तामणिः

### न्यायलक्षणम्

प्रत्यानुमानं परार्थं न्यायसाध्यमिति न्यायस्तद-वयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते।

तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः। अत्रैव वाक्ये अतिव्याप्तेः। किन्तु अनुमितिचरमकारण-लिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्यायः। प्रतिज्ञादिपञ्चवाक्यैः एकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्टवैशिष्ट्यावगाहिमानान्तरमुत्पा-द्यते। तेन च चरमः परामर्शः उत्पाद्यते इति न्या-यजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता।

### । दीधितिः ।

उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम्। प्रतिज्ञादिकं पुनः उदासीनवाक्यवारकन्यायान्तर्गतत्वशून्य-मेव अत्रोपादेयमिति नान्योन्याश्रयः। साध्यादिभेदनि-यन्त्रिताश्च प्रतिज्ञादयो वाच्याः इति विभिन्नसाध्यादि-पञ्चक प्रतिज्ञादिसमुदाये नातिव्याप्तिः। न्यायादेरिव साध्यादेरपि अननुगमात् अनुगमः न्यायादेरपि इष्यते एव।

एतेन प्रतिज्ञानिगमनयोः उदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वं, प्रागेव तु पञ्चानामवयवानाम्।

परन्तु प्रतिज्ञाहेत्वोः कथञ्चित् उपनयनिगमनयोः।

एकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण। तादृशपरामर्शप्रयोजकत्वं च यदि तद्विषयतत्तत्पदार्थोपस्थापक-तया तदा उदाहरणोपनययोरेव तत्पर्यवस्यति।

अथ तदानुकूल्यमात्रेण। तदा को वह्निमान्, कुतो-धूमवत्त्वात् इत्यादेरपि तथात्वमित्यादिकं समाहितम्।

## चिन्तामणिः

अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजन-क शाब्दज्ञानजनकवाक्यत्वं अवयवत्वम्।

अत एव वह्निव्याप्यधूमवानयं इति वाक्ये तदव-यवे च न न्यायावयवलक्षणातिव्याप्तिः। तेन परामर्श-स्य तदवयवेन च परामर्शजनकस्य जननात्

यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषा-भावात्सोऽपि न्याय एव इति।

तन्न कथायामाकाङ्क्षादिक्रमेणैवाभिधानमिति प्रथमं विशिष्टवैशिष्ट्ये आकाङ्क्षा नास्तीति तदभिधाने निग्रहात् इति वक्ष्यते। अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः। आकाङ्क्षाविरहः तुल्य एवेति।

अन्ये तु पञ्चावयववाक्यात् विजातीयमेव शाब्दज्ञा-नमुत्पद्यते इति तद्धीजनकवाक्यत्वमेव न्यायत्वम्। एवं

प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकशब्दत्वमेव तत्तल्लक्षणमिति ।

तन्न । ज्ञानविशेषजनकत्वं तत्तज्ज्ञानविशेषजनकत्वं च न्याये प्रतिज्ञादौ च अनतिप्रसक्तं अनुगतरूपमन्तरेण दुर्निरूपमिति । तत्स्वीकारे तस्यैव लक्षणत्वात् अन्यथा जातिसंगरप्रसंगः । इति चिन्तामणौ

अवयवलक्षणम् ।

दीधितिः

अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् । प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम् । उभयं च प्रतिज्ञाहेतू -हेतूदाहरणे -उदाहरणोपनयौ-उपनयनिगमने इति विशिष्यवक्तव्यमिति । प्रतिज्ञादिप्रतिपाद्य तत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वमिति केचित् । तस्यैवेति । तथा च तादृशजातौ बाधकाभावः इति भावः । बाधकमप्याह । अन्यथेति । न्यायजन्यज्ञाने पञ्चावयव-जन्यत्वात्पञ्च, द्वित्र्यादि जन्ये द्वित्राद्या, एकैकजन्ये च एकैका जातयः इति जातिसंकरः इत्यर्थः । तत्र तत्र भिन्न-भिन्न जातिकल्पने च सुतरां मानाभाव इति भावः ।

केचित्तु यदि च अनुगतकारणमन्तरेणापि तादृश-जातिमत्त्वसम्भवः तदा कदाचित्प्रतिज्ञाजन्येऽपि हेत्वादिजन्य-वृत्तिः हेत्वादिजन्ये प्रतिज्ञादिजन्यवृत्तिर्जातिः स्यादिति संकरः एव इत्यर्थः । एवं सर्वेषां सर्वजातीयत्वं एकजाती

P.T.O.

न्यत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः।

॥ चिन्तामणौ प्रतिज्ञालक्षणम् ॥

तत्र प्रतिज्ञा न साध्यनिर्देशः। साध्यपदेऽतिव्याप्तेः।

किन्तु उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यानानतिप्रसक्तविषयकशाब्दज्ञानजनकवाक्यत्वम्।

अन्यूनानतिप्रसक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम्। तेन उदाहरणादि व्युदासः। निगमने च न परामर्शहेतुः, अबाधितासत्प्रतिपक्षितत्वज्ञानजनकत्वात्।

हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा।

लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा। इतरावयवानां लिङ्गविषयकज्ञानजनकत्वात् इति।

प्रतिज्ञात्वं जातिः, अनुगतानतिप्रसक्तवान्त्रिकव्यवहारादिति केचित्। तन्न, देवदत्तप्रश्नत्वादिना जातिसंकरप्रसंगात्। प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं वाक्यं प्रतिज्ञा इत्यपि न, तज्जनकत्वं तज्जनकत्वज्ञानं वा न अनुगतरूपमन्तरेण संभवतीत्युक्तस्यानुसरणीयत्वात्।

एतेन शब्दोऽनित्य इति लिङ्गधीपरवाक्य-

-जन्यज्ञानवृत्ति कृतकत्वादित्यादिवाक्यजन्यज्ञानवृत्तिजाति-
-योगिज्ञानजनकवाक्यं प्रतिज्ञा इति निरस्तम्।

ननु प्रतिज्ञा न साधनाङ्गम्, विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकाङ्क्षायां हेत्वभिधानस्य प्राथम्यात् इति चेन्न। विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाऽऽ-
-कांक्षायां शब्दानित्यत्वं साध्यं, न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे। न च वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति। अतिप्रसंगात्।

न च विप्रतिपत्तितः साध्योपस्थितिः। तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया च अन्तरितत्वात्, परविप्रतिपत्तिं समयबन्धं च विना स्थापनायाः अभावात्। विप्रतिपत्तिवाक्यस्य पक्षपरि-
-ग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च। आवृत्तौ तु सैव प्रतिज्ञा। न च अवयवान्तरात् हेत्वन्वययोग्या साध्योपस्थितिः। नापि अवयवान्तरेणाऽऽक्षेपात्। साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इति अन्योन्याश्रयात्। तस्मात् प्रतीत्यनुपपत्त्या प्रकृता-
-नुपपत्त्या वा न इह आक्षेपः।

अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्य अनुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा किन्तु विशिष्टे, विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानम्। न च वस्तुतः यत्साध्यं तत्र प्रमाणं वदेति मध्यस्थ-

-नियोगः, वादिद्वयमध्ये तदसंभवात्। तस्मात्सा-
-ध्याभिधानं विना न हेतोः आकाङ्क्षा न वा
अन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति।

॥ इति प्रतिज्ञालक्षणम् ॥

साध्यनिर्देशानन्तरं कुतः इत्याकाङ्क्षायां
साधनताव्यंजकविभक्तिमल्लिंगवचनमेव उचितम्।
अन्यथा अनाकाङ्क्षिताभिधाने निग्रहापत्तेः। लोके
तथैव आकाङ्क्षानिवृत्तिरिति व्युत्पत्तेः इति
प्रतिज्ञानन्तरं हेतूपन्यासः।

हेतुत्वं च अनुमितिकरणीभूतलिङ्गपरामर्शप्र-
-योजकशाब्दज्ञानजनकसाध्यविषयकशाब्दधीजनकहेतु-
-विभक्तिमच्छब्दत्वम्।

प्रतिज्ञावाक्यधीजन्यकारणाकांक्षानिवर्तकज्ञानजनक
हेतुविभक्तिमद्वाक्यत्वम् वा।

पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा।

हेतुपदेन ज्ञाने लक्षणा। अन्यथा लिङ्गस्या-
-हेतुत्वेन हेतुविभक्त्यर्थान्वयात्। तथैवाकांक्षानिवृत्तेः
अनुमितिहेतुज्ञानकरणधूमवत्त्वादिशब्दजन्यज्ञानवृत्ति-
-प्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं
हेतुत्वमित्यन्ये। जातिं विना केन रूपेण

ज्ञानस्य अनुमितिजनकत्वम्। वाक्यविशेषजन्य-
-त्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहादि-
-त्यपरे। अन्वयव्याप्त्यभिधायकावयवाभिधा[illegible]-
नप्रयोजनकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमध्या-
-यावयवत्वम् अन्वयिहेतुत्वम्। एतदेव व्यतिरेकव्या-
-प्यभिधायकपदप्रक्षेपात् व्यतिरेकिहेतुत्वम्।
अन्वयव्यतिरेकोदाहरणाकांक्षाप्रयोजकतथाभूताव-
-यवत्वमन्वयव्यतिरेकिहेतुत्वम्। यद्वा पक्षसपक्ष-
-सतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि। अ-
-त्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षस-
-पक्षसद्धेतुवचनं केवलान्वयि। यद्वा अनुमिति-
-कारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्य
विषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचक-
हेतुविभक्तिमच्छब्दत्वं अन्वयिहेतुत्वम्। एतदेवा-
-प्रतीतान्वयसाध्यसाधनेतिविशेषणाद्व्यतिरेकहेतु-
-लक्षणम्। कथायां धूमादित्येव प्रयोक्तव्यम् न तु
धूमवत्त्वादिति। मतुपोऽनर्थकत्वात्। सामान्यवत्त्वे सति
बाह्यकरणप्रत्यक्षत्वात् इत्यपार्थकम्। विभक्त्युपस्था-
-पितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरविरुद्धस्य
अन्वयादिति केचित्। तन्न। सप्तमीबलात् सामान्य-
-वत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च समानाधिकर-
ण्योपस्थितौ विशिष्टहेतुत्वान्वयात्। तथैव
व्युत्पत्तेः। नह्ययमर्थः अस्मान्नावगम्यते इति।

॥ अथ दीधितौ प्रतिज्ञालक्षणम् ॥

साध्यनिर्देशः प्रतिज्ञेति सूत्रम्। साध्यो विधेयविशिष्टो धर्मः।

तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवन्हित्वविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयवः इति पर्यवसितार्थः।

उदाहरणस्य पक्षतावच्छेदकविशिष्टे न साध्यवैशिष्ट्यज्ञानम्।

उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानमिति तयोर्व्युदासः।

•किन्चित्यादि• प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तम्। प्रकृतन्यायावयवत्वपर्यवसितम्। •उद्देश्येति• - प्रकृतेत्यर्थः।

वन्हिसाध्यकोपनयस्य वन्हिसाध्यकानुमित्यन्यूनानतिरिक्त-विषयकशाब्दबोधजनकस्य वारणाय प्रकृतद्वयं। तथा च यादृशपक्षसाध्यकन्यायावयवत्वं तादृशपक्षसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं पर्यवसितोऽर्थः।

धूमावालोकवान्पर्वतो वन्हिमान्धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यूनेति। निगमनवारणायानतिरिक्तेति।

यद्यपि निगमने साक्षात्पक्षवाचकपदं न श्रूयते तथापि न्यूनताभंगायोपनयस्थाऽयमादिपदस्यानुषङ्गात्तथा बोध्यम्। इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनंचेत्यादिना निराकरिष्यति।

तदर्थश्च निगमनमन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं सत् परामर्शहेतुः येन निगमनत्वं न्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात् । अबाधितत्वादेः तद्बोधोपयिकविशिष्ट-हेतुसम्बन्धस्य च बोधकतया तस्य अतिरिक्तविषयक-ज्ञानजनकत्वादिति ।

यत्तु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् इत्यादौ यत्र पृथिवीतरेभ्यो भिद्यते तत्र पृथिवीत्यत्युदाहरण-वारणाय तदिति ।

तत्तुच्छम् । तेन पृथिव्यामितरभेदस्याऽविषयीकरणात् । तात्पर्यक्रमेण तादृशबोधजनकत्वस्य अतिप्रसक्तत्वात् ।

न च तावताप्युदाहरणस्य तथात्वसंभवः । यत्तत्पदेरनन्वयात् ।

यदि च निगमने नायं आदिपदं निविशते वाक्यैकवाक्यतया एव विशिष्टार्थभानादिति विभाव्यते, तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्व-भानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्यो-पनयस्य यत्र च पक्षसाध्ययोः तादृप्येण दृष्टान्तत्वहेतुत्वाभ्यां उपन्यासः तादृशसिषाधयिषया च न्यायप्रयोगः तत्रोदाहरणोपनययोः । यत्र वा पर्वतत्वावच्छेदेन साध्यसिद्धेरदृश्यतायामेतत्पर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य ।

सत्यन्तस्य च अवयवाऽघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्याऽप्रमादिनिगमनान्तरभागस्य वारणाय तत् ।

यद्यपि सर्वमभिधेयं प्रमेयमित्यादौ अतिरिक्ताप्रसिद्धिः

न च कोट्यप्रसिद्ध्या प्रमेयं न वा इति विप्रतिपत्तेः संशयस्य च अयोगान्न तादृशी प्रतिज्ञा ।, प्रकृतानुमितिविषयता-समव्याप्तविषयताकत्वं, प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं

वा वक्तव्यमिति वाच्यम् । सकलाभिधेयवृत्तिधर्मवत् सकलाभिधेय-
-निष्ठात्यन्ताभावाप्रतियोगि आकाशाभाववद्वा इदं द्रव्यमित्यादौ
विशिष्टपक्षबोधके उपनयेऽतिव्याप्तिः ।

तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयत्वं तद-
-न्यूनविषयत्वम् । तादृशविषयताविलक्षणविषयताशून्यत्वम् ।

यदि च मैत्रः पचति अयं गौः इत्यादेरेव
प्रतिज्ञायाः यथोपवर्णितविशिष्टज्ञानजनकत्वसंभवतादात्म्येन
गोः साध्यत्वात् गोत्वकालाद्यनुपस्थित्या गोत्वादेः साध्यत्वानु-
-पपत्तेः पदार्थतावच्छेदकजातौ हेत्वर्थान्वययोगाच्च ।

वन्ह्यादिसाध्यकप्रतिज्ञायां अव्याप्त्या यथोपवर्णितलक्षणमाक्षि-
पति - यदिचेति । अत्र चाऽसंभवाभावमाविष्कर्तुं कतिपयप्रतिज्ञाजन्यबोधस्य
यथोपवर्णितानुमित्यन्यूनाऽनतिरिक्तविषयकत्वं व्यवस्थापयति । चैत्र
इत्यादिना ।

वन्हिमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वन्हेः
संयोगात्मकः संबन्धो भासते तथैव वन्हिव्याप्यधूमवानयं इत्युप-
नयसंभवात् ।

शाब्दबोधे तु वन्हिमतोऽभेदः एवं भेदे साध्ये
भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्ममीक्षते । तदा
यादृशपक्षसाध्यकाः पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञा
सम्प्रदायसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्त्यत्विस्य
संशयस्य अनिवर्तकौ यस्तावद्बोधानामन्यतमबोधः तज्जनकत्वं
वक्तव्यम् ।

एवं च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य,
उक्तहेतुवारणाय तादृशबोधान्यतमेति । प्रकृतप्रतिज्ञाजन्यताव-
-च्छेदकीभूतं यादृशयादृशबुद्धित्वं तादृशतादृशबुद्धित्वावच्छिन्न-

अन्यतमजन्यतानिरूपितजनकतापर्यन्तस्य विवक्षणीयतया उक्त-
-सम्बन्धावच्छिन्नबोधमादाय न तत्रातिप्रसंग इति उक्तप्रायम्।
॰गवाभेदस्येत्यादि॰। सकलषष्ठ्यन्तैः समं बोधा विशेष्य
धर्तव्या इत्यग्रिमस्यान्वयः। यद्यपि तादात्म्येन गोसाध्यकस्थ-
-ले अनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वं प्रतिज्ञायाः सं-
-भवतीति प्रागभिहितं, तावता एव गवाभेदः प्रतिज्ञाप्रतिपाद्य
इत्यस्य लाभात् तत्र तादृशबोधमादाय लक्षणं कर्तव्यमिति
स्फुटमेव। तथापि तत्र तादृश एव बोधो लक्षणघटकः
न तु अन्यविधो बोधः इति स्फुटीकर्तुं तदुपादानम्।

संयोगेन समवायेन वा वह्नौ वह्निमदभेदस्य,
समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य, पाककर्त्रभेदस्य,
विशेषणतया इतरेभ्यो भेदे, इतरभेदवत्त्वस्य, इतरा-
-न्याभेदस्य, इतरभेदवत्त्वस्य, इतरभिन्नाभेदस्य बोधा विशेष्य धर्त-
-व्या इति दिक्।

तावद्बोधानिवर्त्यसंशयानिवर्तकतावद्बोधनिवर्त्ययावत्संशय-
-निवर्तकबोधजनकत्वं वाच्यं इत्यपि कश्चित्।

चैत्रः पश्यति, घटो नेत्रेणेति प्रतिज्ञायां साध्ये
विषयत्वानुयोगित्वयोः सम्बन्धविधया एव अनुप्रवेशात् यथोपव-
-र्णितसाध्यगमतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनय-
-त्वात्तथा चाऽयमित्याकारकः सुवच एव प्राचामुपनयः।

नव्यानां पुनरनन्यगतिकतया तद्व्याप्यहेतुमान्
तद्वानित्याकारो योग्यतावशाद् तथा साध्यस्य तद्व्याप्यस्य
वा परामर्शः।

केचित्तु वह्निमान्वेति विप्रतिपत्तौ संशये च
वह्निमत्तदन्योन्याभावयोः तादात्म्यविशेषणत्वाभ्यां

कोटित्वेन जिज्ञासितत्वादिति वाचात्स्येन वन्हिमानेव साधयितुमुचितः, न तु वन्हिः रजे ज्ञासितत्वात् ।

तथाचायमित्याकारको वन्हिमद्व्याप्यधूमवांश्चायमित्याकारको वा उपनयः । न तु वन्हिव्याप्यधूमवांश्चायमित्याकारकः ; अर्थान्तरत्वादिति प्राहुः ।

यत्र चाऽन्तरा तादृशबोधो न जनितः तत्रापि तादृशाकांक्षायोग्यताशालित्वरूपं तज्जनयोग्यत्वमक्षतम् ।

तल्लाभश्च जातिविशेषाऽस्थापकशाब्दत्वाक्यपदयोरुपसन्धानादेवेति ।

अन्यूनत्यादि । तथा च उद्दृश्यानुमितिसमानविषयकलिङ्गाविषयकशाब्दज्ञानजनकन्यायावयवत्वमर्थः । व्यतिरेकिणि ह्रादनिर्धूम इत्यादौ निर्वन्हित्वहेतुके यथाह्रदभिन्नमिति दृष्टान्तवतः ह्रदावृत्तिधर्मशून्यत्वादिहेतुके वा उदाहरणस्य वारणाय समानविषयकान्तम् पञ्चमुख्यविशेष्यकार्थकम् । उपनयवारणाय लिङ्गाविषयकेति ।

अद्यपि प्रकृतलिङ्गविषयकत्वं पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् [गन्धवती तथा गन्धादित्यादावव्याप्तकम्] । न च अत्र उपनयासंभवः इदमाद्यगन्धवत्वेन परामृष्टे हेतुभूतगन्धवत्वान्वययोगादिति वाच्यम् । साध्याभावव्यापकगन्धाभावाभाववत्वेन अन्वयात् ।

अत एव व्यतिरेकिणिञ्च नेमं पृथिवीत्यादिकः प्राचां प्रयोगः ।

यदि च दण्डवान् रक्तदण्डवान् इत्यस्यान्वयो नानुपपन्नः तद्विशिष्टे शुद्धतद्विशिष्टान्वयस्यैव अव्युत्पन्नत्वात् इत्युच्येत । तदा नानुपपत्तिगन्धोऽपि ।

पक्षविशेषणत्वेन तद्विषयकत्वस्यार्थं वह्निमानग्निमान् वह्नेः इत्यादौ पक्षविशेषणत्वेन साध्यविशेषत्वेन तद्विषयकत्वस्य,

दीधि कृत्यं कथनं : प्रमेयत्वमभिधेयं प्रमेयत्वात् गोत्वाभावो न सास्नादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकञ्चोपनयस्य ।

तथापि पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वं तद्बुद्धिजनकेन लिङ्गविषयत्वस्य भावो वाच्यः ।

वस्तुतो लिङ्गं लिङ्गत्वम् ।

तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयकत्वं तच्छून्यत्वं अर्थः ।

तच्च हेतौ साध्यव्याप्यत्वावगाहित्वं, हेतुमत्ताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकावगाहित्वञ्च : द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात् । गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासंग्रहाय अवच्छेदकद्वयोपादानम् ।

अन्यूनानतिरिक्तपदमिति च मूलमुद्रयानुमित्यन्यूनानतिरिक्तविषयत्वपरम् । हेतुत्वमभिधेयं प्रमेयत्वात् इत्यादौ पञ्चम्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वा अवश्यं वाच्यत्वात् ।

सङ्ख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेषणत्वेनैवाऽन्वयात् । प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षात् भेदेनाऽन्वयस्याऽव्युत्पन्नत्वेर्वक्ष्यमाणत्वात् ।

चैत्रस्येदं न मैत्रस्य, मैत्रस्येदं न चैत्रस्य, द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसम्बन्धाभावबोधस्य विभक्त्यर्थविशेष्यतां विनानुपपत्तेः।

चैत्रो न पचतीत्यादौ तिङर्थस्यैव विशेष्यनुयोगिनि सप्तमीं सुबर्थस्याप्यभावान्वयात्।

हेतुविषयकज्ञानजनकत्वव्याप्याऽवयवतावच्छेदकरूपशून्यत्वे सति उदाहरणान्यन्यायावयवत्वं तत्त्वम्। तादृशावच्छेदकं हेतुत्वादिकमिति केचित्।

• हेत्वभिधानेति। • जिज्ञासाजनकत्वं - तद्योग्यता। वाक्यत्वं - न्यायावयवत्वम्। लिङ्गीत्यादि। लिङ्गविषयकेति पूर्वोपस्थितार्थकम्। अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति। लिङ्गी - साध्यं - तद्विषयकं - तद्विशेष्यकम्।

तेनेदं जलं नित्येनहेत्वप्रकारकप्रमाविषयशून्यत्वात् • इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वादित्यादौ यन्न जलं तन्नित्येनहेत्वप्रकारकप्रमाविषयः इत्युदाहरणे नातिप्रसंगः। लिङ्गविषयकेत्यस्य पूर्वोक्तव्याप्यत्वाविषयकार्थकत्वे तु हेतुवारणाय यल्लिङ्गीति।

लिङ्गविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताऽऽदिभिर्विशेषणं वाच्यम्।

तेन वह्निमान् वह्निसामग्रीमत्वात् अयं हेतुः इदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वात् इत्यादौ नातिप्रसंगः।

लिङ्गविषयकज्ञानजनकत्वाऽनियतलिङ्गिविषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तु तादृशरूपान्तरापरिचये दुर्ग्रहत्वात् अनुपादेयम्।

॥ इति दीधितौ, प्रतिज्ञालक्षणम् ॥

अनुमितीत्यादि । जनकान्तं न्यायावयवार्थकम् । निगमन-
-वारणाय साध्याविषयकेति ।

साध्याऽविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्न-
-हेतुविशिष्टहेतुत्वाविषयताबहिर्भावेण, पूर्वोपदर्शित साक्षा-
-त्परंपरासाधारणप्रकृतपक्षविशेषणत्वेन वा तेन पूर्वोपदर्शित-
-हेतौ नाव्याप्तिः ।

इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात्,
अयं न धूमवानालोकवान् आर्द्रेन्धनशून्यत्वात् इत्यादौ
व्यतिरेक्युदाहरणस्य,

हेतुत्वपक्षक साध्यान्वितस्वार्थबोधकैदंपदशालिनः
उपनयस्य च वारणाय हेतुविभक्तिमदेति । तदर्थश्च
प्रकृतसाध्यान्वितस्वार्थबोधनसमर्थोपस्थितिजनक विभ-
-क्तिमत्त्वम् ।

हेत्विति संपातायातम् । यदि च पर्वते पर्वतभिन्न-
-त्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वं च
सिषाधयिषया च न्यायप्रयोगः तत्र यथा तादृशज्ञानाभावादु-
-त्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्युदाहरणेऽतिव्याप्ति-
-रित्युच्यते । तदा अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधक-
-विभक्तिमत्त्वं वक्तव्यम् । उदाहरणान्यत्वेन वा विशेषणीयम् ।
केचित्तु साध्यविषयकधीजनकत्वानियतहेतुविभक्तिमत्त्वानियताव-
-यवतावच्छेदकरूपवत्त्वं समुदितलक्षणार्थ इत्याहुः ।

तच्चिन्त्यम् । हेतुत्वप्रतिपादकेति । विभक्त्यर्थहेतुत्व-
-विशेष्यकान्वयबोधजनकन्यायावयवत्वमर्थः । हेतुत्वं प्रमेयमि-
-त्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति । तस्मादितरेभ्यो भिद्यते

इत्यादिनिगमनवारणाय हेतुत्वेति विशेषणेति च।
घटो दण्डवान् वह्निर्धूमादित्यादिकाः न प्रतिज्ञाः। तदवृत्ते-
रतदात्मनश्च तद्धर्मव्यापकत्वायोगात् सम्प्रदायविरोधाच्च। तेन
तत्रत्यनिगमने नातिप्रसङ्गः इति भावः।

उदाहरणेति क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्वात्
नाव्याप्तिः। अनुक्तोदाहरणस्थलेऽपि तादृशस्वरूपयोग्यतासत्वात्
तद्वारणाय न्यायावयवेति। उदाहरणत्वं चेदं न न्यायावय-
वत्वगर्भम्। वैयर्थ्यात् [साध्यविषयकेत्यादि अयं न
दण्डात् दण्डसंयोगाजन्यकुम्भत्वानित्यादौ प्रतिज्ञानिगमनयोः
वारणाय साध्यविषयेत्यादिव्याख्यातार्थकम्। उपनयविशेषवारणा-
-य हेतुपञ्चम्यन्तेति।]

हेत्विति हेतुत्वबोधकार्थकम्। हेतुपञ्चम्योः
वैकल्पिकमुपादानम्। उपनयस्य च अन्तेऽनुसन्धीयमाना
प्रथमैवान्तः। एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्य-
न्तत्वे अन्वयायोगात् कस्यचिद्व्यतिरेकिणि उदाहरणस्य पञ्चम्य-
न्तत्वसम्भवे तु तद्वारणं पूर्ववत्। अस्य च अर्थवद्भागस्य
हेतुपञ्चम्यन्तत्वं बोध्यम्। तेन निरर्थकतासिलक्ते वह्निमान्
इत्यादौ नाव्याप्तिः।

पञ्चम्यादेः तसिलाद्यादेशत्वनादिनां नये तु
नानुपपत्तिगन्धोऽपि। केचित्तु। हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादक-
-पदशालित्वं पूर्ववत्। साध्यविषयकबोधजनकत्वञ्च इतर-
-नैरपेक्ष्येण प्रकृतहेतुत्वविशेष्टसाध्यविषयकज्ञानाजनकत्वं,
साध्यं चेह न विवक्षितम्। वैयर्थ्यादित्याहुः।
पञ्चम्यन्तेति। अनुमितिपरत्वलक्षणयत्वं हेतुत्वादौ
पञ्चमी लाक्षणिकी। वृक्षाद्विभजते इत्यादौ लाघवेनाव-

-धित्वे अवधिमत्त्वे वा शक्तत्वात् ।

द्रव्यनिष्ठावधित्वमिव विभागनिष्ठमवधित्वमपि सम्बन्धविशेषः । स चातिरिक्तो वेत्यन्यदेतत् । तत्सम्बन्धाग्रहेऽपि व्यवहारः, शक्तिभ्रमात् । तच्छावयैति पततीत्यादौ लाघवाद्विभागे शक्तिः तज्जनकत्वञ्च क्रियायाः संसर्गमर्यादया भासत इत्यपि वदन्ति ।

अतः पञ्चमन्तेति लाक्षणिकविशेषणम् । तस्मादित्यत्र च तत्पदे न लक्षणा ।

शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात् । पर्वतो वन्हिमान् वन्हिसामग्रीमान् वा तस्मादित्यादिकस्तु न प्रयोगः सम्प्रदायविरोधादिति वदन्ति । यत्तु हेत्वन्वयानुरोधात् वन्हिमानित्यादावपि ज्ञानलक्षणेति । तदसत् । पञ्चम्याः ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणया शाब्दोपपत्तौ तत्र लक्षणायां मानाभावात् । अत शाब्दोक्तमावृत्तौ सैव प्रतिज्ञेति ।

अत एव व्याचक्षते यतो द्रव्यं गुणाः कर्मेत्येष हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वञ्चेति । अत एव लोके किं वन्हिमदिति पृष्टे तद् गृहं वन्हिमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्वात् इत्युत्तरे च । न हि तत्र ज्ञाने प्रश्नः । येन लक्षणया ज्ञानेनोत्तरयेत् ।

न वा परकीय आविंशत्यनुरोधादजिज्ञासिताभिधानम् । न वा कुत इति प्रश्ने ज्ञातमित्यध्याहारः । मानाभावात् ।

दाहो दहनात् न जलात् जलं स्पर्शवत् न गन्धात् नापि शब्दादित्यादौ नञर्थान्वयानुरोधात् जन्यत्वरूपहेतुमत्त्वं जन्यज्ञानविषयत्वरूपहेतुमत्त्वं जन्यज्ञानविषयत्वरूपज्ञाप्यत्वञ्च पञ्चम्यर्थः। एवञ्च हेतुमत्त्वे शाब्दावपि ज्ञाप्यत्वे लक्षणैव।

न च धूमादालोकवान् पर्वतो वह्निमान् धूमात् धूमाद्वह्निमत्सधर्मा पर्वतो वह्निमान् धूमात् इत्यादौ प्रतिज्ञायाम्, पर्वतो धूमात् वह्निमान् इत्यादौ च तत्रत्यनिगमने च अतिव्याप्तिः। प्रकृतपक्षान्वितस्वार्थ-बोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्च-म्यन्तलाक्षणिकपदवदवयवत्वस्य विवक्षितत्वात्। यत्तु। अयमात्मा ज्ञानादित्यत्रातिव्याप्तिः शक्त्यैव ज्ञानोपस्थितिसम्भवे लक्षणाविरहादिति।

तन्न। यद्विषयकज्ञानस्य हेतुत्वमवगतं तस्य व्याप्त्यादिजिज्ञासायाम् उदाहरणादिप्रयोगः।

न चेह ज्ञानविषयकत्वेनोपस्थितिं विना लक्ष-णम्। अन्यथा सुखादेरपि व्याप्त्याद्युपदर्शनप्रसङ्गात्। केचित्तु। पञ्चम्यन्तलाक्षणिकपदवत्वनियतावयवतावच्छेदक-रूपवत्त्वं तादृशपदवत्वव्यभिचार्यवयवतावच्छेदकशून्या-वयवत्वं वा विवक्षितमित्याहुः।

नव्यास्तु पञ्चम्याः ज्ञानज्ञाप्यत्वे लक्षणयैवोपपत्तौ न प्रातिपदिकेऽपि लक्षणा आकांक्षा-वैचित्र्याच्च। पदार्थैकदेशेऽपि ज्ञाने प्रातिपदिकार्थो विषयित्वेनान्वेति कार्तृकृतविकृतौ धात्वर्थः। यद्धर्मविशिष्ट हेतुः प्रयुज्यते आकांक्षादिवशात् तद्धर्मविशिष्टस्यैव व्याप्यत्वं उपद-र्शयति। अन्यथा यथार्थधूमज्ञानादित्यादिप्रयोगेऽपि धूमादेः

व्याप्यत्वोपदर्शनप्रसङ्ग इति प्राहुः। इतरान्वितस्वार्थबोधकत्वे सति, स्वीयं यदन्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति अन्यपदवत्वे सति, स्वीयानंत्यपदार्थविशेष्यकान्वयबोधजनकान्यत्वे च सति न्यायावयवत्वं प्रतिज्ञात्वम्। प्रतिज्ञाहेत्वोः उपनयनिगमनयोश्च स्वार्थौ परस्परमन्वितौ। न तूदाहरणस्य केनापि। पदं विभक्त्यन्तम्। तेन निगमने नातिव्याप्तिः।

प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वम्। निगमनवारणाय उपस्थापितान्तम्।

प्रमेयत्वमभिधेयं प्रमेयत्वात् इत्यादौ प्रकृत्यर्थपक्षान्वितस्वार्थबोधकपदम्यन्तार्थान्वितो न प्रतिज्ञार्थः। अपि तु तदेकदेशार्थ इति।

स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायावयवत्वम्।
विशिष्टवैशिष्ट्यबोधजनकस्वार्थबोधजनकन्यायावयवत्वम्।
— ,, — ,, ——— ,, —विशिष्टबोधजनकन्यायावयवत्वम्
वा तत्वम्। रावकत्वयतया हेत्वर्थविशिष्टसाध्यं वैशिष्ट्यं ग्रासते न पुनः अवयवान्तरार्थविशिष्टस्य कस्यचिदिति।

इतरान्वितस्वार्थबोधकन्यायावयवत्वमुदाहरणत्वं। अन्वयव्याप्तिबोधकत्वं व्यतिरेकव्याप्तिबोधकत्वं च विशेषलक्षणम्। इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वम्। स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं च उपनयत्वम्। अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम्।

हेत्वर्थश्च न प्रतिज्ञार्थे विशेषणत्वेनान्वेति । किन्तु तदे-
-कदेशार्थे इत्युक्तप्रायम् । इति श्रीमन्महामहोपाध्याय-
-भट्टाचार्यतार्किकशिरोमणिरघुनाथकविरचितायां तत्त्वचिन्तामणि-
-व्याख्यायां अनुमानदीधितिपराख्यायामवयवग्रन्थस्सम्पूर्णः ।

---

## व्याप्तेः निरूपणम् ।

### ८। पूर्वपक्षीय व्याप्तिः ।

साध्यवान् पक्षः

साध्यः अस्मिन् अस्ति इति साध्यवान् । अस्मिन् इत्यत इदं शब्दस्य पक्षः अर्थः। सप्तम्याः अधिकरणत्वम् अर्थः। प्रकृत्यर्थस्य पक्षस्य सप्तम्यर्थ अधिकरणतायां आधेयता संबन्धेन अन्वयः। तथा च पक्षनिष्ठाधिकरणता इत्यर्थो संपन्नः। अस्ति इत्यत अस् धातोः आधेयत्वं अर्थः। आख्यातस्य आश्रयत्वमर्थः। सप्तम्यर्थ अधिकरणतायाः अस् धात्वर्थ आधेयत्वे निरूपितत्व सम्बन्धेनान्वयः। तथा च पक्षनिष्ठाधिकरणता निरूपिताधेयताश्रयः साध्यः इति ~~शाब्दबोधः~~ शाब्दबोधः।

नियमः- अन्यपदार्थप्रधान समासस्थले विग्रहवाक्यात् यादृश विशेष्य-विशेषणभावपन्नो ~~जायते~~ बोधो जायते। समासवाक्यात् ~~...~~ तद्विपरीत विशेष्यविशेषणभावापन्नो बोधो जायते।

तादृश नियमानुरोधेन पूर्वं यत् विशेष्यभूतः साध्यः समासवाक्ये विशेषणभूतो भवति। विशेषणभूतो यः पक्षः विशेष्यभूतो भवति। तथा च साध्यनिष्ठाधेयतानिरूपिताधिकरणताश्रयः पक्षः इति शाब्दबोधः।

साध्यवान् पक्षः इत्यत मतुप् प्रत्ययस्य स्वनिष्ठाधेयता-निरूपिताधिकरणत्वं अर्थः। मतुप् प्रत्ययार्थस्य तस्य आश्रयता सम्बन्धेन पक्षे अन्वयः। एवं पदेन साध्यो ग्राह्यः।
तथा च साध्यनिष्ठाधेयतानिरूपिताधिकरणताश्रयः पक्षः इति बोधः।
अथवा- स्वनिष्ठाधेयत्वमर्थः। तस्य च मतुपर्थस्य च निरूपकता सम्बन्धेन पक्षे अन्वयः। तथा च स्वनिष्ठाधेयतानिरूपकः पक्षः इति बोधः।

साध्यवदन्यस्मिन्नसम्बन्धः व्याप्तिः।

साध्यनिष्ठाधेयतानिरूपिताधिकरणतावदन्यनिरूपितवृत्तित्वाभावो व्याप्तिः

वह्निमान् धूमात् इत्यत्र लक्षणसमन्वयः।

अत्र साध्यो वह्निः। साध्यवान् वह्निमान् पर्वतः। तदन्यः जलह्रदः। तन्निरूपितवृत्तित्वं मीनशैवालादौ। वृत्तित्वाभावः धूमे इति लक्षणसमन्वयः।

'धूमवान् वह्नेः' इत्यत्र नातिव्याप्तिः। तथाहि अत्र साध्यो धूमः। साध्यवान् धूमवान् पर्वतः। तदन्यः यथा जलह्रदः तथा अयोगोलकमपि। तन्निरूपितवृत्तित्वमेव वर्तते हेतौ वह्नौ अवृत्तित्वं नास्ति इति नातिव्याप्तिः।

नन्वेवमपि वह्निमान् धूमात् इत्यादावव्याप्तिः। अत्र साध्यो वह्निः साध्यवान् - वह्निमान् वह्नेरवयवादपि तदन्यः पर्वतमहानसादिरपि तद्वृत्तित्वमेव हेतौ धूमे अवृत्तित्वं नास्ति इति अव्याप्तिः। इति चेत् न

साध्यनिष्ठाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशात्। तथा च लक्षणम् - साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठाधेयतानिरूपिताधिकरणतावदन्यनिरूपितवृत्तित्वाभावः। एवञ्च नाव्याप्तिः। तथाहि येन संबन्धेन साध्यः स्वाधिकरणे वर्तते स सम्बन्धः साध्यतावच्छेदकसम्बन्धः। प्रकृते साध्यः वह्निः स्वाधिकरणे पर्वते संयोगसम्बन्धेनैव वर्तते इति साध्यतावच्छेदकसम्बन्धः संयोगसम्बन्धः। तादृश संयोगसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्तः पर्वतमहानसादिरेव। न तु वह्नेरवयवाः। अवयव अवयविनोः समवायात्। वह्निः स्वावयवेषु समवायसम्बन्धेनैव वर्तते न तु संयोगेन इति, तदन्यः जलह्रदादयः। तद् अवृत्तित्वं हेतौ धूमे वर्तते इति नाव्याप्तिः।

पूर्वं तावत् साध्यनिष्ठाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य अनिवेशात् समवायेन वह्न्यधिकरणं आदाय अव्याप्तिः आपादिता। प्रकृते संयोगस्यैव तादृश सम्बन्धत्वात् यत्किञ्चित्-सम्बन्धावच्छिन्न वह्न्यधिकरणमादाय दोषापत्तिः न संभवते।

नन्वेवं अपि 'वह्निमान् धूमात्' इत्यादावेवाव्याप्तिः साध्यपदेन महानसीयवह्नेः स्वीकारे संयोगसम्बन्धावच्छिन्न वह्निनिष्ठाधेयतानिरूपिताधिकरणतावान् महानसः। तदन्यः पर्वतोऽपि पर्वतः महानसीयवह्निमान् इति प्रतीतेः प्रामाणिकत्वात्। तद्वृत्तित्वमेव - पर्वतवृत्तित्वमेव हेतौ धूमे वर्तते अवृत्तित्वं नास्ति इति अव्याप्तिः। इति चेत् न।

साध्यनिष्ठाधेयतायां साध्यतावच्छेदकावच्छिन्नत्वस्य निवेशात्। तथा च लक्षणम् - साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्न साध्यनिष्ठाधेयता - निरूपिताधिकरणतावद्भिन्ननिरूपितवृत्तित्वाभावः। एतादृश इन निवेशेन नाव्याप्तिः। तथाहि साध्ये यत् विशेषणं तत् साध्यतावच्छेदकं। प्रकृते साध्यः केवलवह्निः न तु पर्वतीयवह्निः उताहो महानसीय वह्निः। अतः साध्यतावच्छेदकं केवलवह्नित्वम्। न तु पर्वतीय वह्नित्वं महानसीयवह्नित्वं वा। एतादृश केवलवह्नित्वावच्छिन्नाधेयता निरूपिताधिकरणतावान् पर्वतमहानसादयः सर्वेऽपि भवन्ति। नाम वह्नित्वावच्छिन्नकेवलवह्न्यधिकरणान्येव। तदन्यः - जलह्रदादिरेव तद्वृत्तित्वं हेतौ धूमे वर्तते एव इति नाव्याप्तिः।

पूर्वं तावत् साध्यनिष्ठाधेयतायां साध्यतावच्छेदकावच्छिन्नत्वस्यानिवेशनात् साध्यपदेन यत्किंचित् वह्न्यधिकरण निष्ठवह्निमादाय अव्याप्तिः आशङ्किता। इदानीं तु साध्यतावच्छेदकावच्छिन्नत्वस्य निवेशात् साध्यपदेन केवलवह्नेः स्वीकरणादत्र नाव्याप्तेः प्रसङ्गः।

नन्वेवमपि 'वह्निमान् धूमात्' इत्यादावेव अव्याप्तिः। साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावान् पर्वतः। तदन्यः महानसोऽपि। पर्वतं महानसो न इति प्रतीतेः प्रामाणिकत्वात्। अतः तद्वृत्तित्वमेव हेतौ धूमे वर्तते ~~कुतः~~ इति अव्याप्तिः। इति चेत् न।

साध्यनिष्ठाधेयतानिरूपिताधिकरणतायां अधिकरणतावच्छिन्नत्वस्य निवेशात् । तथा च लक्षणम् - साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्न अधिकरणतावदन्यनिरूपितवृत्तित्वाभावः। (अधिकरणतावच्छिन्नप्रतियोगिताकभेदवन्निरूपित वृत्तित्वाभावः) एवञ्च नाव्याप्तिः । तथाहि लक्षणोक्तसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नत्वेन सर्वाण्यपि वह्न्यधिकरणानि स्वीकरणीयानि । तत् प्रतियोगिकभेदः नाम वह्निमद्भिन्न इत्याकारकभेद एव । एतादृशभेदस्तु वह्न्यनधिकरणे जलह्रदादावेव संभवति । अतः एतादृशभेदवन्निरूपितवृत्तित्वाभावः हेतौ धूमे वर्तत एव । वह्निरेव नास्तीति तज्जन्यस्य सुतरां अभावात् ।

इतः पूर्वं तावत् अधिकरणतावच्छिन्नत्वस्य अनिवेशात् अधिकरणतापदेन यत्किञ्चित् अधिकरणतां स्वीकृत्य अव्याप्तेः आपादनं कृतं इदानीं तु तादृशविशेषणस्य निवेशात् वह्निनिष्ठाधेयतानिरूपिताधिकरणतापदेन पर्वतनिष्ठाधिकरणतां स्वीकृत्य अथवा महानसनिष्ठाधिकरणतां स्वीकृत्य परस्परं तत्रैव अव्याप्तेः आपादनं कर्तुं न शक्यते ।

नन्वेवं सत्यपि 'वह्निमान् धूमात्' इत्यादावेव अव्याप्तिः। संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाधेयतानिरूपिताधिकरणतावान् पर्वतः महानसादिः । तदन्यः जलह्रदादि यथा तथा धूमावयवाः अपि । महानसभिन्नाः धूमावयवाः इति प्रतीतेः संभवात् । तत्र धूमस्य विद्यमानत्वात् तन्निरूपितवृत्तित्वाभावः नास्ति किन्तु वृत्तित्वमेव वर्तते इति अव्याप्तिः इति चेत् न -

साध्यवदन्यनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनात् । तथा च लक्षणम् -

साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वावच्छिन्न प्रतियोगिताकभेदवन्निरूपित ~~[illegible]~~ हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावः। एवं च नाव्याप्तिः। तथाहि ~~[illegible]~~ येन सम्बन्धेन हेतुः स्वाधिकरणे वर्तते स सम्बन्धः हेतुतावच्छेदकसम्बन्धः। प्रकृते हेतुः धूमः पर्वतमहानसादिषु संयोगेनैव वर्तते इति संयोगसम्बन्धः हेतुतावच्छेदकसम्बन्धः।

साध्यवदन्यस्मिन् धूमावयवे समवायसम्बन्धेन धूमस्य सत्वेऽपि (अवयव अवयविनोः समवायात्) प्रकृते संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावः अपेक्षितः। अतः तदन्यपदेन जलह्रदादीनां एव स्वीकरणं कार्यं। तत्र धूमस्यावृत्तित्वात् संयोगेन तदवृत्तित्वं धूमे समायातं इति नाव्याप्तेः प्रसङ्गः।

पूर्वं साध्यवदन्यनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य अनिवेशनात् यत्किञ्चित् सम्बन्धावच्छिन्नेन हेतोः वृत्तित्वं उपपाद्य तन्निरूपितवृत्तित्वाभावः नास्ति वृत्तित्वमेव वर्तते इत्यव्याप्तेः आपादनं कृतम्। प्रकृते च धूमरूपहेतोः अवच्छेदकता सम्बन्धः संयोग एव इति हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैव अपेक्षितत्वात्। तस्य च जलह्रदादेः अप्रसिद्धत्वात् नाव्याप्तेः प्रसङ्गः।

नन्वेवं 'धूमवान् वह्नेः' ~~[illegible]~~ इत्यादि व्यभिचारि स्थले अतिव्याप्तिः ~~[illegible]~~ दुर्वारैव।

साध्यवान् पर्वतमहानसादिः तदन्यः यथा तप्तायःपिण्डः तथा जलह्रदादिरपि। तत्र वह्नेः हेतोः अभावात् तन्निरूपितवृत्तित्वाभावः वर्तते इति व्यभिचारिणि समन्वयात् अतिव्याप्तिः। इति चेन्न साध्यवदन्यनिरूपितवृत्तित्वाभावः न केवलवृत्तित्वाभावः। किन्तु वृत्तित्वत्वावच्छिन्न प्रतियोगिताकाभावः। तथा च तप्तायः

साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नाधेयतानिरू-
-पिताधिकरणतावच्छिन्न अधिकरणतावदन्य हेतुतावच्छेदकसम्बन्धावच्छिन्न
- वृत्तित्वावच्छिन्नवृत्तित्वाभावः। एवं च नातिव्याप्तिः। तथा हि
साध्यवदन्यनिरूपितवृत्तितावच्छिन्नवृत्तित्वेन अवच्छिन्नं वृत्तित्वं न
केवलवृत्तित्वं। जलहृदनिरूपितवृत्तित्वं, कासारनिरूपितवृत्तित्वं
तडागःपिण्डनिरूपितवृत्तित्वं सर्वमपि ग्राह्यम्। तथा च एतादृश
वृत्तित्वावच्छिन्नेषु मध्ये तडागःपिण्डनिरूपितवृत्तित्वस्यापि
संकलिततया तत्र च वह्नेः सत्वेन वृत्तित्वाभावः नास्ति
वृत्तित्वमेव वर्तते इति नातिव्याप्तिः।

पूर्वं तावत् वृत्तित्वावच्छिन्नस्य विशेषणस्यानिवेशात्
यत्किंचित् अधिकरणनिरूपित वृत्तित्वं स्वीकृत्य तदभावः तत्र
वर्तते इति अतिव्याप्तिः आपादिता। इदानीं तु वृत्तितावच्छि-
न्नत्वरूपविशेषणविशिष्ट प्रतियोगिताकाभावस्य ग्रहणात्
सर्वाधिकरणनिरूपितवृत्तित्वमेव स्वीकरणीयम्। तथा च तदन्तः
पाति तडागःपिण्डनिरूपितवृत्तित्वावच्छिन्नप्रतियोगिताकाभावस्या-
ऽपि ग्राह्यत्वेन तन्निरूपितवृत्तित्वमेव हेतौ वह्नौ वर्तते अवृत्तित्वं
नास्तीति नातिव्याप्तेरापादनं युक्तिसहम्।

नन्वेवं 'द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वात्' इत्यादौ
सद्धेतौ अव्याप्तिः। यत्र यत्र गुणकर्मान्यत्वविशिष्टसत्ता
तत्र तत्र द्रव्यत्वं इति व्याप्तेः सत्वात् अयं सद्धेतुः।
साध्यतावच्छेदकसमवायसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नसाध्यनिष्ठा-
धेयतानिरूपिताधिकरणतावान् द्रव्यं तदन्यः गुणः कर्म च। तद्
अवृत्तित्वं हेतौ विशिष्टसत्तायां वक्तव्यम् परन्तु विशिष्टं
शुद्धान्नातिरिच्यते इति न्यायानुरोधेन गुणकर्मान्यत्वविशिष्ट
सत्ता शुद्धसत्ता च एकैव इति ज्ञायते।

एवं च द्रव्यत्वतदन्यस्मिन् गुणे कर्मणि च विशिष्ट

सत्तायाः अभावेऽपि शुद्धसत्तायाः सत्वात् तद्वृत्तित्वमेव हेतौ अवृत्तित्वं नास्ति इति अव्याप्तिः। इति चेत् न साध्यवदन्यवृत्तितायां हेतुतावच्छेदकावच्छिन्नत्वस्यापि विशेषणात्। तथा च लक्षणम् * साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्न साध्यनिष्ठाधेयतानिरूपित अधिकरणत्वावच्छिन्न प्रतियोगिताकभेदवन्निरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्न हेतुतावच्छेदकावच्छिन्नवृत्तित्वत्वावच्छिन्नवृत्तित्वाभावो व्याप्तिः। एवं च नाव्याप्तिः। हेतौ यत् विशेषणम् तत् हेतुतावच्छेदकम् इदानीं हेतुः गुणकर्मान्यत्वविशिष्टसत्ता। हेतुतावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वम्। तथा च साध्यवदन्यस्मिन् गुणे कर्मणि च सत्तात्वेनरूपेण सत्तायाः सत्वेऽपि हेतुतावच्छेदकभूतगुणकर्मान्यत्वविशिष्टसत्तात्वेनरूपेण सत्तायाः अभावात् तद्वृत्तित्वं हेतौ विशिष्टसत्तायां समायातम् इति नाव्याप्तिः।

पूर्वं तावत् साध्यवदन्यवृत्तितायां हेतुतावच्छेदकावच्छिन्नत्वस्य अनिवेशनात् शुद्धसत्तामपि स्वीकृत्य "विशिष्टं शुद्धान्नातिरिच्यते" इति न्यायानुरोधेन अव्याप्तिः आपादिता। इदानीं तु वृत्तितायां हेतुतावच्छेदकावच्छिन्नत्वस्य निवेशनात् विशिष्टसत्तात्वस्य हेतुतावच्छेदकत्वात् सत्तात्वेनरूपेणसत्तां स्वीकृत्य अव्याप्तिः नापादयितुं शक्यते।

नन्वेवं सत्यपि साध्यवदन्यावृत्तित्वं इति व्याप्तिलक्षणस्य 'इदं वाच्यं ज्ञेयत्वात्' इत्यादि केवलान्वयि स्थले साध्यवदन्यस्य अप्रसिद्ध्या अव्याप्तिः। तथाहि यत्र यत्र ज्ञेयत्वं तत्र तत्र साध्यत्वम् इति व्याप्तेः सत्वात् अयं सद्धेतुः। साध्यवान् वाच्यत्ववान् निखिलं जगत्। तदन्यः न कोऽपि क वर्तते इति साध्यवदन्यस्य अप्रसिद्ध्या अव्याप्तिः।

न चेदं लक्षणं अन्वयव्यतिरेकि स्थलस्यैव वाच्यम्

'सत्तावान् जातेः' इत्यादि अन्वयव्यतिरेकी स्यतेऽपि अभावः।

यत्र यत्र जातिः तत्र तत्र सत्ता द्रव्यादिषु जातिः तत्र तत्र सत्ता। यत्र यत्र सत्ताभावः सामान्यादौ तत्र तत्र जात्यभावः इति व्याप्तेः सत्वात् अन्वयव्यतिरेकि स्थलमिदं।

साध्यवान् = सत्तावान् द्रव्यादित्रिकम्। तदन्यः = सामान्यादिः तत्र यद्यपि हेतोः जातेः अवृत्तित्वं वर्तते तथापि साध्यवदन्यस्मिन् वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनात् प्रकृते च समवायसम्बन्धस्य तादृश सम्बन्धरूपत्वात् नाम - हेतुतावच्छेदकसम्बन्धरूपत्वात् तादृश समवायसम्बन्धेन साध्यवदन्य सामान्यादिषु यस्य कस्यचित् वस्तुनः अपि वृत्तित्वमेव अप्रसिद्धम् इति वृत्तित्वाभावः सुतरां अप्रसिद्धः।

न्यायः - पूर्व - पूर्व - पदार्थानां अप्रसिद्ध्या उत्तर - उत्तर पदार्थानां सुतरां अप्रसिद्धिः इति न्यायात्। अतः सिद्धान्तमार्गेण अनुसरणीया।

हेतुमन्निष्ठविरहाप्रतियोगिना।
साध्येन हेतोरैकाधिकरण्यम्॥

हेतुव्यापकसाध्यसामानाधिकरण्यम्
व्यापकत्वं च - तदधिकरणवृत्यन्ताभावाप्रतियोगित्वम्।
व्याप्यो नाम - तदभाववद् अवृत्तित्वम्।

तथा च लक्षणम् - हेत्वधिकरणवृत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्।

लक्षणस्यास्य वह्निमान् धूमात् इत्यादौ समन्वयः। अत्र साध्यो वह्निः। हेतुः धूमः। हेत्वधिकरणम् नाम धूमाधिकरणम् पर्वतः। तद् वृत्ति यो अत्यन्ताभावः इति चेत् वह्न्यभावो न भवति। वह्निर्नास्ति इति प्रतीतेः अभावात्। अपि तु उदासीन घटपटाभाव एव। तत्प्रतियोगि घटः। अप्रतियोगि साध्यो वह्निः। तदधिकरणं पर्वतः। तत्रैव धूमस्यापि सत्वात् वह्नेः सामानाधिकरण्यम् हेतौ धूमे समायातं इति लक्षण समन्वयः।

एवं धूमवान् वन्हेः इत्यादि व्यभिचारिस्थले नातिव्याप्तिः। साध्याभाववति - धूमाभाववति अयोगोलके हेतोः - वन्हेः सत्वात् व्यभिचारि अयं हेतुः। अत्र हेत्वधिकरणम् नाम - वन्ह्यधिकरणं यथा पर्वतादि तथा अयोगोलकमपि, तद्वृत्ति यो अत्यन्ताभावः इति चेत्, साध्याभावः धूमाभावः एव भवति। धूमो नास्तीति प्रतीतेः सत्वात्। तत्, प्रतियोगि एव भवति साध्यो धूमः। अप्रतियोगि न भवति। अतः नातिव्याप्तिः।

एवं च इदं वाच्यं ज्ञेयत्वात् इत्यादि केवलान्वयि स्थले नाव्याप्तिः। तथा हि हेत्वधिकरणम् - ज्ञेयत्वाधिकरणम् निखिलं ज्ञातं तद् वृत्तिः यः अत्यन्ताभावः इति चेत् गुणत्वाभावः। तत्र प्रतियोगि गुणत्वं। अप्रतियोगि च वाच्यत्वम्। वाच्यत्वसामानाधिकरण्यं हेतौ ज्ञेयत्वे इति नाव्याप्तिः।

एवं सत्तावान् जातेः इत्यादि अन्वयव्यतिरेकिस्थलेऽपि नाव्याप्तिः। तथा हि अत्र जात्यधिकरणम् - द्रव्यादित्रिकम्। तद्वृत्ति यो अत्यन्ताभावः इति चेत् सामान्यत्वाभावः। तत्प्रतियोगि सामान्यत्वं। अप्रतियोगि साध्यसत्ता। तत् सत्ता सामानाधिकरण्यम् (द्रव्यादित्रिकावृत्तित्वेन) हेतौ जातौ समायातं इति नाव्याप्तिः।

नन्वेवं सत्यपि 'वह्निमान् धूमात्' इत्यादावेव अव्याप्तिः। तथा हि हेतुपदेन महानसीयधूमस्य स्वीकारे तदधिकरणं महानसः। तत्र वर्तते यः अत्यन्ताभावः इति चेत् पर्वतीयवन्ह्यभावः। तत्प्रतियोगि एव भवति साध्यो वह्निः एवं चालिनी न्यायेन हेतुपदेन पर्वतीयधूमस्य स्वीकारे तदधिकरणं पर्वतः। तत्र वर्तते यः अत्यन्ताभावः इति चेत् महानसीय वन्ह्यभावः। तत्प्रतियोगि साध्य एव भवति साध्यो वह्निः अप्रतियोगि न भवति इत्यव्याप्तिः। इति चेत् न

समानाधिकरणवह्निधूमयोः एव व्याप्तेः स्वीकारात्। पर्वतीय धूम पर्वतीयवन्ह्योः एवं महानसीयधूम महानसीयवन्ह्योः एव व्याप्तिः। तथा हि - हेतुपदेन महानसीयधूमस्य स्वीकारे तद् वृत्ति यः अत्यन्ताभावः

इति चेत् महानसीय वह्न्यभावः एव स्वीकार्यः। स च न भवति। अतः
उदासीन घटाद्यभावः। तत्प्रतियोगि उदासीनघटः। अप्रतियोगि साध्यो वह्निः इति
इति नाव्याप्तिः। तत्समानाधिकरण्यम् हेतौ धूमे इति उपपादनीयम्। एवं एव
हेतुपदेन पर्वतीयधूमस्य स्वीकारे तद्वृत्तिः यः अत्यन्ताभावः इति चेत् पर्वतीयवह्न्यभावः
न भवति। किन्तु उदासीनाभाव एव स्वीकार्यः। तत्प्रतियोगि उदासीनं वस्तु।
अप्रतियोगि साध्यः वह्निः। तत् सामानाधिकरण्यम् हेतौ पर्वतीय धूमे इति
नाव्याप्तिः।

नन्वेवं सत्यपि 'वह्निमान् धूमात्' इत्यादावेव अव्याप्तिः।